



## तिरुमलक्षेत्रे ३०-१२-२०२० दिनाङ्के वैभवेन प्रचलितस्य श्रीनिवासप्रणयकलहमहोत्सवस्य दृश्ये।



तिरुमलक्षेत्रे २५-१२-२०२० दिनाङ्के वैकुण्ठ-एकादशीसन्दर्भे सवैभवं प्रचलितः 'स्वर्णरथोत्सवः'



तिरुमलक्षेत्रे २६-१२-२०२० दिनाङ्के शास्त्रोक्तरीत्या आचरितं वैकुण्ठद्वादशीचक्रस्नानम्




३०-१२-२०२० दिने ति.ति.दे तिरुपति संयुक्तकार्यनिर्वहणाधिकारिभ्यः श्री पि.बसन्त कुमार् ऐ.ए.एस् महोदयेभ्यः श्री श्री श्री पेद्दजीयर् स्वामिपादैः तिरुपति श्रीगोविन्दराजस्वामिनः स्वर्णाभरणानां प्रदानदृश्यम्।



२९-१२-२०२० दिनाङ्के देहली श्रीश्रीनिवासस्य आलयाय 'गुडिको गोमात' (आलयस्यैका गोमाता) कार्यक्रमाङ्गत्वेन गोः वत्सस्य च प्रदातारः ति.ति.दे पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि तथा ति.ति.दे कार्यनिर्वहणाधिकारिणः डा.के.एस् जवहर् रेड्डि ऐ.ए.एस् महाभागाः।



## गीतामृतम्

द्रुपदो द्रैपदेयाश्च सर्वशः पृथिवीपते।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक्।।

(भगवद्गीता १८/१)

सञ्जयः धृतराष्ट्रं प्रति - स्वामिन्! रणरङ्गे द्रुपदः, द्रौपदीपुत्राः, महापराक्रमशाली सुभद्रापुत्रः अभिमन्युः अपि पृथक् पृथक् स्वस्वशङ्खान् अपूरयन्।।



## सङ्कीर्तनम्



संसारेऽस्मिन् महाघोरे जन्मरोगभयाकुले।
अयमेको महाभागः पूज्यते यदधोक्षजः।।

गर्भवास-जनन-ज्वरादिरोगपीडाभयाकुले सकलदुखकारणीभूते अस्मिन् अक्षयसंसारे मग्नैः सर्वैरपि पूजनीयः महान् पुरुषः एक एव। स च अधोक्षजः श्रीकृष्णः श्रीनिवास एव।।

# मकरसङ्क्रमणम्

मकरसङ्क्रमणं भारतीयानां प्रमुखपर्वसु अन्यतमम्। इदं तिलपर्व इत्यपि निर्दिश्यते। सौरमानानुसारं मेषादिद्वादशराशीन् प्रति सूर्यस्य प्रवेशदिनमेव सङ्क्रमणदिनम् इत्युच्यते। अस्मात् दिनात् परमपवित्रस्य उत्तरायणस्य आरम्भः। एकस्मिन् वर्षे द्वादशसङ्क्रमणानि भवन्ति। तत्र प्रमुखं कर्काटकसङ्क्रमणं मकरसङ्क्रमणं च। मकरसङ्क्रमणदिनात् आरभ्य रात्रेः अवधिः कुण्ठितो भवति। परमपवित्रे अस्मिन् सङ्क्रमणपर्वणि क्रियमाणं स्नान-दान-जप-तप-हवन-पूजा-तर्पण-श्राद्धादिकं कर्म अधिकं फलप्रदम् इति शास्त्रे उच्यते। अन्यानि सङ्क्रमणानि आचरितुम् अशक्तः एतदेकं सङ्क्रमणं वा आचरेत् इति प्रवदन्ति मनीषिणः।

सूर्यः अस्माद् दिनात् दक्षिणतः उत्तरदिशि चलति। अतः तद्दिनात् षण्मासपर्यन्तम् उत्तरायणकालः इति उच्यते। एतादृशे मकरसङ्क्रमणे सूर्यस्य मकरराशिप्रवेशानन्तरं चत्वारिंशत्(४०) घटिकाः यावत् पुण्यकालः इत्युच्यते। अस्मिन् पुण्यकाले पुण्यतीर्थस्नानेन पुरुषार्थाः सिद्ध्यन्ति। विशेषतया गङ्गास्नानेन ब्रह्मलोकः प्राप्यत इति वदन्ति। अशक्ताः चेत् उष्णजलेन वा स्नानादिकम् आचरेयुः। तिलपर्व इति प्रसिद्धे अस्मिन् पर्वणि तिलतैलं लेपयित्वा स्नानं, तिलैः तर्पणं, तिलनिर्मितधेनोः दानं, गुड-नारिकेल-कलायमिश्रिततिलस्य दानं, पीडापरिहारार्थं बालानाम् अभिषेकं, विशेषतया मुद्गमिश्रितान्नस्य नैवेद्यं च कुर्वन्ति। केषुचित् भारतीयराज्येषु वाताटानाम् उड्डयनमपि महता प्रमाणेन क्रियते। एतद्दिने लोकमातुः गोः पूजापि विधीयते। शुभाशुभकर्मसु एवं सर्वत्रापि गोपूजा अत्यन्तं श्रेयस्करी। यो हि प्रतिदिनं न शक्नोति स सङ्क्रमणदिने वा गोपूजामाचरेद् इति महतां वचः। तत्रापि सङ्क्रमणस्य आचरणे क्वचित् प्रादेशिकानि वैशिष्ट्यानि सन्ति।।

भास्करस्य यथा तेजो मकरस्थस्य वर्धते।
तथैव भवतां तेजो वर्धतामिति कामये।।

वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-१०

# जनवरि २०२१

श्रीशार्वरिनामसंवत्सरस्य मार्गशिरकृष्णद्वितीयातः - पुष्यकृष्णतृतीयापर्यन्तम् - १९४१




मुखचित्रम् - तिरुमल श्रीवेङ्कटेशः

अन्तिमरक्षापुटः - तिरुचानूरु श्रीपद्मावती देवी


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


सूचना
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— प्रधानसम्पादकः


सङ्केतः
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# भक्ताङ्घ्रिरेणु

## आळ्वार्वैभवः

- डा. एस्.एन्.सम्पत् कुमाराचार्यः
चरवाणी - ९९००७८१३५६



साधुपरित्राणाय दुष्टशिक्षणाय च भगवतः दयानिधेः श्रीनिवासस्य अवतारः। ''अवजानन्ति मां मूढाः'' इति गीताचार्यस्यापि शोकवचनम् स्वशोकापनोदनाय मानवानां सामान्यानां तत्त्वहितप्रवर्तनाय च भगवान् स्वीयभूषणादीन् नित्यसूरींश्च अवतारयामास। एते द्वादशसंख्यात्वेन प्रथिताः भक्तिभरावनमितशिरस्काः भगवत्साक्षात्कारमापन्नाः द्राविडभाषायां गानमकुर्वन्। एताः गाथाः चतुस्सहस्रसंख्याकत्वेन अद्यापि श्रोतॄणां हृदयङ्गमा विराजन्ते। विशिष्टाद्वैतसिद्धान्ते प्रस्थानत्रयेण सह द्राविडप्रबन्धस्यापि प्रमाणकोटिप्रविष्टत्वं पूर्वाचार्याः उररीचक्रुः। द्वादशनित्यसूरिषु आळ्वार् इति प्रख्यातवैभवेषु ''भक्ताङ्घ्रिरेणुः'' अपि अन्यतमः।

भगवतः अपेक्षया भक्तानां महिमा अनन्ता। प्रसिद्धा खलु इयं उक्तिः ''त्वद्भृत्यभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य'' इति। भक्तानां पदकमलाङ्घ्रिरेणुः ''तोण्डरप्पोडि' इति सार्थकं नामधेयम्। प्रभवनामसंवत्सरे मार्गशिरमासे ज्येष्ठानक्षत्रयुक्तकृष्णपक्षचतुर्थ्यां तिथौ एते अवतीर्णाः। भगवतः वनमालायाः अंशाः। ''मण्डण्गुडि'' इति चोलदेशप्रान्ते जनिमलभत। मातापितृभिः 'विप्रनारायण' इति नामकरणं कृतम् । बाल्य एव वेदे तथा शास्त्रे च अभ्यासः आसीत्। भगवति भक्तिः प्रत्यहं वर्धमाना अवर्तत। ''भूलोकवैकुण्ठ'' इति प्रख्याते श्रीरङ्गे भगवतः श्रीरङ्गनाथस्य कैङ्कर्यकरणे रुचिः एधमाना अशोभत। नैष्ठिकब्रह्मचर्यव्रतं धारयन् एते श्रीरङ्गं प्रत्यागताः। श्रीरङ्गनाथस्य पुष्पमालिका समर्पणरूपसेवां कर्तुमैच्छत। पुष्पमालायाः तुलस्याः अपि भगवत्प्रीतिमत्वात् तस्याः प्ररोहणमावश्यकमभवत्। अतः नन्दनवनमेकं निर्माय अनेकपुष्पतुलसीग्रहणाय प्रबन्धं कृत्वा, तत्पोषणादिकं प्रीत्या स्वयम् अकुर्वन्। प्रत्यहं पुष्प-तुलसीमालादिकं भगवते अर्पयन् तुतोष। युवावस्थायां कदाचित् देववेविनामकदास्याः वशमापन्नाः। परन्तु श्रीरङ्गनायकि -

श्रीरङ्गनाथकृपया मोहमुक्ताः आजीवनं पुष्पाभिवृद्धिमालाग्रन्थनसमर्पणे कार्ये निरताः अभवन्।।

"तिरुमालै" नामकः प्रबन्धः प्रथमतः एतैः रचितः। अत्र पञ्चचत्वारिंशत् गाथाः सन्ति। एषः प्रबन्धः श्रीशौनकमुनिविरचितश्रीविष्णुधर्मसदृशः। अत्र स्वात्मानुभवप्रकारः प्रपञ्चितः। भगवतः कृपा एव जीवनोज्जीवनहेतुरित्यत्र निरुपिता। द्वितीयः प्रबन्धः भगवतः निद्राया उत्थापनं 'तिरुप्पळ्ळि-एळुच्चि' दशसंख्याकगाथायुक्तं प्रबन्धम्। निद्रातः प्रबोधनं रामायणे प्रथितम् "कौसल्या सुप्रजा राम" - श्रीविश्वामित्रकृतम्। भगवतः निद्रा नाम योगनिद्रा। "उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत" इति कठोपनिषदुक्तिः। अज्ञाननिद्रा तु अस्माकं, ततः प्रबोधनं भगवतः कटाक्षपातेन विना न सम्भवति, अतः सः प्रबोध्यते।

"निजश्रीमालैकश्रुतिविहितबोधेऽखिलजने।
प्रहृष्टे नैर्भर्यादिव कलितनिद्रे भगवति।।
प्रभाते सेवार्थं सुरनरवरान् वीक्ष्य मिलितान्।
प्रबोधोक्तिर्व्यज्ञाप्युचितमथ भक्ताङ्घ्रिरजसा।।"

प्रबन्धरचनेन अनेन सामान्या शिक्षिता भवन्ति। लोके राजा इव अर्हणीयः पूजनीयः श्रीरङ्गनाथ एव। सः सर्वत्र वसति, समस्तश्च तत्र वसति। अतः वासुदेवशब्दवाच्यः सर्वस्मात् परतरश्च। सः प्रत्येकस्मिन्नपि आत्मनि अन्तर्यामिरूपेण आस्ते। न कोपि निन्दनीयः, नैव वृथा क्रोधः करणीयः। क्रोध एव उन्नतेः प्रतिबन्धकः। भगवतः कटाक्षेण क्रोधः दूरीभवति। अन्यकटाक्षपात्रत्वराणां कथं कामक्रोधादयः अपगच्छेयुः। अतः एव आळ्वार् द्वारा श्रीरङ्गनाथः प्रार्थ्यते 'उत्थाय दयां कुरु' इति। भगवद्दयापात्राणां का हानिः।

"तमेव मत्वा परवासुदेवं रङ्गेशयं राजवदर्हणीयम्।
प्राबोधिकीं योऽकृत सूक्तिमालां भक्ताङ्घ्रिरेणुं भगवन्तमीडे।।"

इति स्तुतिपरं पद्यमिदम्।

प्रबन्धद्वयकरणद्वारा जगतामुपकृतवतां भक्ताङ्घ्रिरेणूनां महिमा अपारा अनन्ता। बद्धादरैः प्रत्यहं सेवितव्यौ प्रबन्धौ इति।



मौलौ मायूरबर्हं मृगमदतिलकं चारुलालाटपट्टे
कर्णद्वन्द्वे च तालीदलमतिमृदुलं मौक्तिकं नासिकायाम्।
हारो मन्दारमालापरिमलभरितः कौस्तुभस्योपकण्ठे
पाणौ वेणुश्च यस्य व्रजयुवतियुतः पातु पीताम्बरो नः।।



**भावार्थः -**

यस्य मौलौ मायूरबर्हं, यस्य सुन्दरललाटपट्टके सिन्दूररूपं तिलकम्, उभयोरपि कर्णयोः अत्यन्तं मृदुस्वभावयुतं तुलसीदलम्, यस्य नासिकायां मौक्तिकम् आभरणम्, यस्य उपकण्ठे मन्दारदिपुष्पाणां परिमलयुतः कौस्तुभमणिशोभितः हारः, यस्य हस्ते मारुतपूर्णरन्ध्रः, तादृशः पीताम्बरयुक्तः गोपबालिकाभिः परिवृतः श्रीकृष्णः अस्मान् सर्वांश्च च सर्वदा रक्षतु।

# तिरुमळिसैक्षेत्राधीशस्य
# ‘भक्तिसार’
## इत्यनुपमाभिधानप्राप्तिवैभवम्

- डा.वि.केशवप्रपन्न पाण्डे
चरवाणी - ८१२४९७०३१६



मखायां मकरे मासे चक्रांशं भार्गवोद्भवम्।
महीसारपुराधीशं भक्तिसारमहं भजे।।

अथ पुरा कदाचिद्दिव्यमहर्षयोऽत्रिभृगुवसिष्ठाङ्गिरसप्रमुखा ऋषयः पितामहं चतुर्मुखमेत्य भूम्यामस्यां तपश्चरणायोत्तमं क्षेत्रं किमिति ज्ञातुकामाः किञ्चन श्रेष्ठं शीघ्रफलप्रदायि च दिव्यक्षेत्रं पप्रच्छुः। श्रुत्वा च तेषामिमानि शुभानि वचनान्यादितो विधाता कमप्युपायं चिन्तयित्वा सद्यस्ततो देवशिल्पिनं विश्वकर्माणश्चाहूय तत्साहाय्येन च तुलामेकामादाय तुलायास्तस्या एकस्मिन्भागे शैलवनादिसहितं समस्तभूभागमपरस्मिन् च भागे सर्वलोकक्षेमङ्करं सदा दिव्यर्षिभिराचरिततपोभिः पवित्रीकृतश्च **विदेहभवनक्षेत्रम** इत्याख्यातं ‘‘तिरुमळिसै’’ नामकं दिव्यक्षेत्रमारोप्य तोलयामास। परं तत आश्चर्यमयं दृश्यं ददृशुस्तत्रोपस्थितास्समेऽपि ऋषयो यद् यस्यान्तु घटायां ‘‘तिरुमळिसै’’ इत्याख्यं क्षेत्रमारोपितमासीत् तत्तूपरि नोत्तस्थौ, परमन्यस्यां घटायान्तु यानि कान्यपीतराणि समस्तानि भूक्षेत्राणि स्थापितान्यासन् तान्युत्तस्थुः। तदा तद्दर्शनेन विस्मयान्वितो विधाता ‘‘तिरुमळिसै’’ इति क्षेत्रं भूमेः सारतमं महत्पुण्यभूभागमिति परिज्ञाय तस्य महीसारक्षेत्रमिति दिव्यं नाम विदधे। ‘‘जातौ जातौ हि यच्छ्रेष्ठं तद्रत्नमित्यभिधीयते’’ इत्युक्तप्रकारेण मह्या अस्या रत्नसदृशम् अर्थात् सारतमं दिव्यक्षेत्रमिदं नित्यभगवदाराधनसुगन्धितम् अद्यापि महीसारक्षेत्रत्वेन प्रसिद्धिं प्राप्य नितरां राराजते। श्रूयते ह्येतद्विषयकं प्रशस्तपद्यमिदं यथा -

यानि कानि च पुण्यानि क्षेत्राणि धरणीतले।
तुलां नार्हन्त्यनेनेति तन्महीसारमुच्यते।। इति।

द्वापरेऽतीतेषु चानेकलक्षसंवत्सरेषु, सिद्धार्थनाम्नि पुण्याब्दे, मकरमासे, मखानक्षत्रयुक्ते भानुवासरे, कृष्णपक्षप्रतिपत्तिथौ च सा देवी भगवतः सुदर्शनस्यांशभूतं पिण्डाकृतिं

कश्चन तेजोमयं महापुरुषं प्रसूतवती। प्रथमे ''तिरुमळिसैप्पिरान्'' इति प्रथितः कालान्तरे स एव महापुरुषः स्वकीयातिमानुषेण वैभवेन ''भक्तिसार'' इति नाम्ना प्रसिद्धिङ्गतः। तदवतरणविषये उक्तञ्च दिव्यसूरिचरिते यथा -

**सा गर्भमाधत्त मुनेश्च पत्नी सुदर्शनांशेन तदानुविष्टम्।**
**पपात गर्भो भुवि तैष्यमासे मखाभिधाने महनीयतारे।।** इति।

**महामुनेः भक्तिसारनामप्राप्तिवैभवम् -** अथ कस्मिंश्चिद्दिवसे भगवद्गुणानुभवलीने भक्तिसारे पुरातनं स्वीयं किञ्चन वस्त्रं सीव्यति सति नभःपथा वृषभाधिरूढः सदाशिवः साम्बः सञ्चरन्नधस्ताद् यदृच्छया तं महामुनिं ददर्श। परमुपरिष्ठात् तस्योपरि पतन्तीं तयोश्छायामनिच्छन्तं तं मुनिं ततोऽपसृत्यान्यत्रोपविशन्तञ्च दृष्ट्वा विस्मिता भवानी भवमुवाच 'कथमावाम् अवमन्यतेऽयम्' गच्छावस्तावत् तदन्तिकं तं परीक्षितुम् इत्युक्तवत्यां असकृत्पृष्टायां भवान्यां विवशः त्रिपुरान्तकस्तथेत्युक्त्वा तमभ्युपगमत्। तत्र च तयोः प्रश्नप्रतिवचनशृङ्खलाऽऽरभतैवम्-

**भवः -** मय्यागतस्य महादेवे पार्श्वस्थे तव सुव्रत! इत्यारभ्य..

**भक्तिसारः -** तर्ह्यस्याः पृष्ठतस्सूच्याः यथा तन्तुर्विनिस्सरेत्। इति यावत्पर्यन्तम्।

श्रुत्वा च भक्तिसारस्येमानि प्रतिवचनानि कोपपराकाष्ठाङ्गतः स शिवः सद्यः स्वललाटनेत्रानलेन अनङ्गमिव भस्मीकुर्यामेनमिति धिया प्रलयकालाग्नियुतेन तार्तीयकेन चक्षुषा महता क्रोधेन तमैक्षत, परं महदाश्चर्यं भगवच्चिन्तनपरो भगवान् भक्तिसारोऽपि निजकार्यमनुवर्तयन्नेव सपदि स्वीयपादाङ्गुष्ठाधः स्थितेन तादृशेनैव तृतीयेन स्वचक्षुषा तदीयक्रोधाग्निं प्रशमयितुं लीलयैवैक्षत। एवं रूपेण मुनिपरमशिवयोर्मध्ये युद्धः आरभत। परन्तु निरन्तरं जायमानेन तद्विनाशकारियुद्धेन भीता देवा भगवन्तं नारायणं शरणमुपगम्य तौ निवारयितुं प्रार्थयन्त। सोऽपि लोकरक्षकः स्वीयादेशेन उभावपि प्रशमय्य तान् देवान् विगतशोकान् चकार। अत्रान्तरे तादृश्यामप्यतिभीषणावस्थायां गिरिमिवाविचलितं भगवद्गुणानुभवस्थितं तं मुनिश्रेष्ठं दृष्ट्वा परमविस्मितो भवानीपतिः सप्रेम सम्मानयितुकामो विशेषादरेण ''भक्तिसारः'' इतीदं प्रथमं नामधेयं विधाय मुदितहृदयः स भाललोचनो भवानीं नारायणैकचित्तानाममूदृशानां श्रीवैष्णवानां दिव्यमहिम्न आख्यापयन् सपत्नि निजधाम कैलासं जगाम, भवान्यपि सश्रद्धं सादरमनितरसाधारणमतिमानुषञ्च तद्वैभवं सौत्सुक्यं निशम्य साक्षात्तत् सन्दृश्य चाश्चर्यचकिता मनसा तमभिनन्दितवती। अथ वैष्णवाग्रेसरस्य भगवतो भक्तिसारस्य वृत्तान्तेनानेन भगवदेकशरणानाम् आकारत्रयसंपन्नानां श्रीवैष्णवानां वैभवं दरीदृश्यते।

एवं बहुभिः स्वीयैरतिमानुषैर्वैभवैः विभ्राजमानः स महामुनिः भक्तिसारः सप्तशताधिकचतुसहस्रसंवत्सरान् धरायामस्याम् उवास तत्तद्दिव्यक्षेत्रेषु। अपि च परमकारुणिको दिव्यसूरिरयं जीवोज्जीवनकामनया भगवदनुभवपरीवाहरूपाभ्यां द्राविडाम्नायसङ्काशाभ्यां सकलवेदान्तसारभूतरहस्यत्रयार्थ -प्रतिपादनपराभ्यां तदतिरिक्तस्य समस्तस्य वस्तुनो हेयतानिरूपकाभ्यां तस्यैव भगवतो श्रीपत्युः नारायणस्य उपादेयताप्रतिपादकाभ्यां तस्य सर्वस्मात्परतमेत्यादि दिव्यार्थप्रदातृभ्यां -

१.षण्णवतिसंख्याकात्मकचतुर्थान्त्यादिः (नान्मुगन्तिरुवन्तादि)
२. विंशत्यधिकशतसंख्यात्मकतिरुच्चन्दविरुत्तम् इत्युभाभ्यां स्वीयदिव्यप्रबन्धाभ्याञ्च परमानन्ददायकं भगवतः असंख्येयकल्याणगुणगणानुभवसहितं तत्परत्वञ्चानुभूय जगदिदमनुजग्राह।






# भगवद्गीतासंस्कृतिः

तेलुगु मूलम् - डा।। वैष्णवांघ्रि सेवकदासः-
अनुवादकः श्री जोषि भरद्वाजः
चरवाणी - ९९१२६५९७०७

अस्मिन् भारतदेशे ''श्रीमद्भगवद्गीता'' बहुप्रसिद्धा। गीतायाः अपरिचितः पुरुषः अतिदुर्लभः। न केवल भारते अपि तु पाश्चात्यदेशीयाः अपि इमां गीतां श्रुत्वा, तया बहुप्रयोजनं प्रापुः। गीतायाः ज्ञानं तथा संस्कृतिरिति प्रयोजनं द्विविधम्। गीतापठनेन यल्लभ्यते तत् गीताज्ञानम्। जीवनं यदि गीतापथि निवेशयति तद् गीतासंस्कृतिर्भवति। भगवान् श्रीकृष्णः इमां गीताम् अर्जुनं प्रत्युपदिदेश। तत्र अर्जुनः गीतां श्रुतवान्। तत् गीताज्ञानं भवति। पुनः गीतां श्रुत्वा अर्जुनः एवमुवाच -

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।**
**स्थितोऽस्मि गतसन्देहो करिष्ये वचनं तव।।** इति।।

सः अर्जुनः गीतास्थविषयान् आचरणे स्थापनाय उद्युक्त आसीत्। यदा आचरणे भवति, तदा एव उत्तमफलदायिनी भवति आचरणं देहे जीर्णीकृतं चेत्तदेव संस्कृतिरिति कथ्यते।

को नाम संस्कारः? मार्गे गमनसमये यदि देवालयः दृश्यते तर्हि, गन्ता तत्र स्थित्वा नत्वा अग्रिमकार्यं करोति, तत्तस्य संस्कारः। एवं जन्मदिवसे पुत्रः नूतनवस्त्राणि धृत्वा पित्रोः पादमभिवन्दति। सोऽपि एकः संस्कारः ज्येष्ठानां गौरवप्रदानरूपः भवति। एवमेव विना प्रोत्साहेन यथाकथञ्चित् सत्कर्म क्रियते चेत् तदस्माकं संस्कृतिः। पुनः दैनन्दिनजीवने गीतोक्तविषयाः यदि आचरिष्यन्ते सा एव गीतासंस्कृतिः। तत्रापि गीतोक्तानि बहूनि कर्माणि भक्तैः क्रियन्ते एव।

उदाहरणतया - ''मां स्मर'', ''मम भक्तः भवतु'' ''मां पूजय'', ''मां नमस्कुरु'' इति गीतायां श्रीकृष्णः अवोचत्। एतान् आचरन्ति एव भक्तजनाः किन्तु, तत्र नैके विषयाः प्रतिपादिताः सन्ति। तानपि यदा जीवने परिपालयामः तदा सम्पूर्णविजयः लभ्यते।

गीतायां आदावेव श्रीकृष्णः अकथयत् -

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप।।** इति।

अत्र हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ इति श्रीकृष्णः गम्भीरेण संसूचितवान्। अतः निश्चयेन इमं विषयं मुख्यतया युवकाः साधयेयुः। इदमाचरणं न सुलभं, किन्तु 'यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः' इत्युक्त्यनुसारेण प्रयत्नः करणीयः। तदा निश्चयेन अभ्यासः भवति। तदा वयं गीतासंस्कारिणः भवेम। हृदयदौर्बल्यं त्यक्तव्यम्, कार्योन्मुखाः भवेयुः इति श्रीकृष्णः आदौ रणरङ्गे बान्धवान् शत्रून् इव द्रष्टुम् अर्जुनं प्रति एवम् अवोचत्।

पुरुषः स्वाभाविकतया भयग्रस्तः। तं भयं प्रयत्नपूर्वकम् अधिगन्तव्यम्। मुख्यतया प्रवेशपरीक्षासु, सङ्गोष्ठिषु सभाकम्पनमित्यादयः भयजनकाः। तत्र हृदयदौर्बल्यम् एव कारणम्। तस्मात् ''क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप'' इति वाक्यस्य श्रवणं, मननं, निधिध्यासनञ्च करणीयम्। तदा अन्तस्थः भयः निर्गच्छति। तेन पूर्वोक्ताः दोषाः अस्मासु प्रायः न दृश्यन्ते। एवंरूपेण वत्सरे पञ्च वा षड् वाक्यानि आचरामः चेत् जीवनपर्यन्तं सुखेन जीवेम। इयमेव गीतासंस्कृतिः इत्युच्यते। निश्चयेन युवती-युवकाः इमां पद्धतिम् अनुसरेयुः इति भगवतः सदुपदेशः।



# तिरुमलतिरुपतिदेवस्थानम्

## जनवरि - २०२१

गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |
| 31 | | | | | | |

## फिब्रवरि - २०२१

गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | | | | | | |

## मार्च् - २०२१

गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | 31 | | | |



### जनवरि - २०२१

१. अङ्कलसंवत्सरारम्भः
०६-१२. आण्डाळ् नीराट्टोत्सवः
१३. भोगी, भोगी तेरु
१४. मकरसङ्क्रान्तिः
१५. कनुमा, श्रीगोदादेवीपरिणयोत्सवः
२८. रामकृष्णतीर्थमुक्कोटि

### फिब्रवरि - २०२१

११. श्रीपुरन्दरदासस्य आराधना
१३-२१. देवुनि कडपा - श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
१९. रथसप्तमी, भीष्माष्टमी
२०-२६. तिरुपति - श्रीगोविन्दराजस्वामिनः प्लवोत्सवः
२३. भीष्मैकादशी
२७. कुमारधारातीर्थमुक्कोटि

### मार्च् - २०२१

२-१०. श्रीनिवासमङ्गापुरम् - श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
४-१३. तिरुपति - श्रीकपिलेश्वरस्वामिनः ब्रह्मोत्सवः
११. महाशिवरात्रिः
१३-२१. तिरुपति - श्रीकोदण्डरामस्वामिनः ब्रह्मोत्सवः
२०-२८. तरिगोण्ड - श्रीलक्ष्मीनरसिंहस्वामिनः ब्रह्मोत्सवः
२४-२८. तिरुमलक्षेत्रे प्लोवत्सवः
२८. श्री लक्ष्मीजयन्ती, तुम्बुरतीर्थमुक्कोटि

# तिरुमलतिरुपतिदेवस्थानम्



## एप्रेल् - २०२१

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | |

## मे - २०२१

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | | 1 |
| 2 | 3 | 4 | 5 | 6 | 7 | 8 |
| 9 | 10 | 11 | 12 | 13 | 14 | 15 |
| 16 | 17 | 18 | 19 | 20 | 21 | 22 |
| 23 | 24 | 25 | 26 | 27 | 28 | 29 |
| 30 | 31 | | | | | |

## जून् - २०२१

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | 1 | 2 | 3 | 4 | 5 |
| 6 | 7 | 8 | 9 | 10 | 11 | 12 |
| 13 | 14 | 15 | 16 | 17 | 18 | 19 |
| 20 | 21 | 22 | 23 | 24 | 25 | 26 |
| 27 | 28 | 29 | 30 | | | |

### एप्रेल् - २०२१

०८. अन्नमाचार्य वर्धन्तिः
१३. श्रीप्लवनामसंवत्सरारम्भः (युगादिः)
१४. मत्स्यजयन्ती, तमिळनूतनसंवत्सरारम्भः
१६-२४. वायलपाडु - श्रीपट्टाभिरामस्वामिनः ब्रह्मोत्सवः
१८. रामानुजजयन्ती
१९. श्री रामजयन्ती
२१. श्रीरामनवमी
२१-२९. ओण्टिमिट्ट - श्री कोदण्डरामस्वामिनः ब्रह्मोत्सवः
२४-२६. तिरुमल - श्रीस्वामिनः वसन्तोत्सवः
२६- तः मे ०४ पर्यन्तं नागलापुरम् - श्रीवेदनारायणस्वामिनः ब्रह्मोत्सवः

### मे - २०२१

१४. अक्षयतृतीया, परशुरामजयन्ती
१७. शङ्करजयन्ती
१८. तिरुपति - गङ्गा उत्सवः
१८-२६. तिरुपति - श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवः
२०-२२. तिरुमल श्रीपद्मावतीश्रीनिवासपरिणयमहोत्सवः
२३-३१. हृषीकेष्/नारायणवनम् - श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
२४-२७. तिरुचानूरु - श्रीपद्मावतीदेव्याः वसन्तोत्सवः
२५. श्रीनरसिंहजयन्ती, तरिगोण्ड वेङ्गमाम्बाजयन्ती, अन्नमाचार्यजयन्ती
२६. कूर्मजयन्ती

### जून् - २०२१

०२-१०. कार्वेटिनगरम् - श्रीवेणुगोपालस्वामिनः ब्रह्मोत्सवः
०४. हनुमज्जयन्ती
१९-२७. अप्पलायगुण्ट - श्रीप्रसन्नवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवः
२०-२४ तिरुचानूरु - श्रीपद्मावतीदेव्याः प्लवोत्सवः
२२-२४ तिरुमल - श्रीस्वामिनः ज्येष्ठाभिषेकः
२९ तः जूलै ०१ पर्यन्तं तिरुचानूरु - श्रीसुन्दरराजस्वामिनः अवतारोत्सवाः

# तिरुमलतिरुपतिदेवस्थानम्

## जूलै - २०२१

गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | 1 | 2 | 3 |
| 4 | 5 | 6 | 7 | 8 | 9 | 10 |
| 11 | 12 | 13 | 14 | 15 | 16 | 17 |
| 18 | 19 | 20 | 21 | 22 | 23 | 24 |
| 25 | 26 | 27 | 28 | 29 | 30 | 31 |

## आगस्ट् - २०२१

गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| 1 | 2 | 3 | 4 | 5 | 6 | 7 |
| 8 | 9 | 10 | 11 | 12 | 13 | 14 |
| 15 | 16 | 17 | 18 | 19 | 20 | 21 |
| 22 | 23 | 24 | 25 | 26 | 27 | 28 |
| 29 | 30 | 31 | | | | |

## सेप्टेम्बर् - २०२१

गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | | |



### जूलै - २०२१

१३-१५. श्रीनिवासमङ्गापुरम् - श्री कल्याणवेङ्कटेश्वरस्वामिनः साक्षात्कारवैभवम्
१६. तिरुमलक्षेत्रे स्वामिनः आणिवर् आस्थानम्
१९-२१. तिरुपति - श्रीगोविन्दराजस्वामिनः ज्येष्ठाभिषेकः
२०-२३. तिरुपति - श्रीकपिलेश्वरस्वामिनः पवित्रोत्सवः
२४. गुरुपूर्णिमा, व्यासजयन्ती

### आगस्ट् - २०२१

०८. श्रीचक्रत्ताळ्वार् वर्षतिरुनक्षत्रम्
११. आण्डाळ् तिरुवाडिप्पूरम्
१२. नागचतुर्थी
१३. गरुडपञ्चमी
१६. मातृश्री तरिगोण्ड वेङ्गमाम्बावर्धन्तिः
१७-२०. तिरुमल - श्रीस्वामिनः पवित्रोत्सवः
२०. वरलक्ष्मीव्रतम्
२२. श्रीहयग्रीवजयन्ती, श्रीविखनसमहामुनिजयन्ती
२३. गायत्रीजपः
३०. श्रीकृष्णजन्माष्टमी, गोकुलाष्टमी

### सेप्टेम्बर् - २०२१

०८. बलरामजयन्ती
०९. श्रीवराहजयन्ती
१०. विनायकचतुर्थी
१५-१८. तिरुपति - श्रीगोविन्दराजस्वामिनः पवित्रोत्सवः
१७. श्रीवामनजयन्ती
१८-२१. तिरुचानूरु - श्रीपद्मावतीदेव्याः पवित्रोत्सवः
१९. अनन्तपद्मनाभव्रतम्

# तिरुमलतिरुपतिदेवस्थानम्



अक्टोबर् - २०२१ गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | | | 1 | 2 |
| 3 | 4 | 5 | 6 | 7 | 8 | 9 |
| 10 | 11 | 12 | 13 | 14 | 15 | 16 |
| 17 | 18 | 19 | 20 | 21 | 22 | 23 |
| 24 | 25 | 26 | 27 | 28 | 29 | 30 |
| 31 | | | | | | |

नवम्बर् - २०२१ गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | 1 | 2 | 3 | 4 | 5 | 6 |
| 7 | 8 | 9 | 10 | 11 | 12 | 13 |
| 14 | 15 | 16 | 17 | 18 | 19 | 20 |
| 21 | 22 | 23 | 24 | 25 | 26 | 27 |
| 28 | 29 | 30 | | | | |

डिसेम्बर् - २०२१ गोविन्द... गोविन्द... गोविन्द...

| भानुवासरः | इन्दुवासरः | भौमवासरः | सौम्यवासरः | बृहस्पतिवासरः | भृगुवासरः | मन्दवासरः |
|---|---|---|---|---|---|---|
| | | | 1 | 2 | 3 | 4 |
| 5 | 6 | 7 | 8 | 9 | 10 | 11 |
| 12 | 13 | 14 | 15 | 16 | 17 | 18 |
| 19 | 20 | 21 | 22 | 23 | 24 | 25 |
| 26 | 27 | 28 | 29 | 30 | 31 | |

## अक्टोबर् - २०२१

०६-१५. तिरुचानूरु - श्रीपद्मावतीदेव्याः नवरात्रिब्रह्मोत्सवः
०७-१५. तिरुमल श्रीस्वामिनः नवरात्रिब्रह्मोत्सवः
११. तिरुमल श्रीस्वामिनः गरुडसेवा
१२. सरस्वतीपूजा
१३. दुर्गाष्टमी
१४. महानवमी
१५. विजयदशमी

## नवम्बर् - २०२१

०३. नरकचतुर्दशी
०४. दीपावली, श्रीकेदारगौरीव्रतम्
०८. नागचतुर्थी
११. तिरुमलक्षेत्रे स्वामिनः पुष्पयागः
१६. कैशिकद्वादशी
३०. तः डिसेम्बर् ८ पर्यन्तं तिरुचानूरु - श्रीपद्मावतीदेव्याः ब्रह्मोत्सवः

## डिसेम्बर् - २०२१

०२. धन्वन्तरिजयन्ती
०४. तिरुचानूरु - श्रीपद्मावतीदेव्याः गजवाहनसेवा
०८. तिरुचानूरु - श्रीपद्मावतीदेव्याः पञ्चमीतीर्थम्
०९. तिरुचानूरु - श्रीपद्मावतीदेव्याः पुष्पयागः
१४. गीताजयन्ती
१५. श्रीचक्रतीर्थमुक्कोट्टि
१६. धनुर्मासारम्भः
१८. श्री दत्तजयन्ती



# गोमाहात्म्यम्

- वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

**भा**रतीयानां श्रद्धाबिन्दुषु गौः एकं महत्त्वपूर्णं स्थानम् अलङ्करोति। विशेषतया मकरसङ्क्रमणसन्दर्भे देशे बहुत्र गोपूजा वैभवेन विधीयते। तत्र गोः वैशिष्ट्यं किम्? भारतीयाः कुतो वा गां मातृसमां पश्यन्ति? पालयन्ति? पूजयन्ति च? इत्यत्र दृष्टिं प्रसारयामः।

**गोशब्दः** - अयं पुल्लिङ्गे स्त्रीलिङ्गे च वर्तते। यानसाधनत्वेन गमयत्यस्मानिति गौः=वृषभः पुल्लिङ्गे। वत्सयुतस्त्रीगव्याः दानद्वारा स्वर्गं गमयति इति गौः=स्त्रीलिङ्गे। आहत्य गतिसाधनत्वात् गौः इति यौगिकार्थः। रूढ्याऽपि अयमेवार्थः। किञ्च गौः=वेदाः इत्याद्यप्यर्थाः च वर्तन्ते।

**गोभेदाः** - विष्णुपुराणे उत्तरखण्डे १५० तमे अध्याये गावः दशविधाः प्रोक्ताः। १. गौरकपिला २. गौरपिङ्गला ३. रक्तकपिला ४. नीलपिङ्गला ५. शुक्लपिङ्गाक्षी ६. शुक्लपिङ्गला ७. चित्रपिङ्गाक्षी ८. बभ्रुरोहिणी ९. श्वेतपिङ्गाक्षी १०. श्वेतपिङ्गला इति।

**भुक्त्वा तृणानि शुष्कानि पीत्वा तोयं जलाशयात्।**
**दुग्धं ददति लोकेभ्यो गावो विश्वस्य मातरः॥** इत्युक्तरीत्या वीथिषु अटन्ती सती लब्धेन तृणेन, पत्रेण, अवकरेण, मानवेन अनावश्यकमिति त्यक्तेन वा पदार्थेन स्वोदरं प्रपूर्य परेद्यवि अमृततुल्यं क्षीरं प्रयच्छति इयं गौः। गोमूत्रं, गोमयं, गोः क्षीरं, क्षीरादुत्पन्नानि दधि, तक्रं, नवनीतं, घृतम् इत्यादीनि सर्वाण्यपि द्रव्याणि सम्पद्वृद्धिकराणि। एवं गोसम्बद्धं सर्वमपि समाजपोषकं भवति। उक्तञ्च -''धेनुः सदनं रमणीयम्'' इति। अत्र गोविषयकं किञ्चन सुभाषितं स्मर्तुं योग्यं प्रतिभाति। यथा -

**स्पृष्टाश्च गावः शमयन्ति पापं**
**संसेविताश्चोपनयन्ति वित्तम्।**
**ता एव दत्तास्त्रिदिवं नयन्ति**
**गोभिर्न तुल्यं धनमस्ति किञ्चित्॥** इति।

प्राचीनकाले समाजस्य राज्यस्य सुखसम्पदः स्तरं गणयितुं तत्रत्याः गावः प्रमाणत्वेन आसन्। यथा महाभारते विराटपर्वणि कौरवाः विराटं जेतुकामाः विराटस्य राज्यात् अनेकसहस्रसङ्ख्याकानां गवां चौर्यं कृतवन्तः। तदा विराटस्य पुत्रः उत्तरकुमारः बृहन्नलारूपधारी अर्जुनश्च युद्धं कृत्वा कौरवेभ्यः सकाशात् गाः प्रतिनीतवन्तौ इति विषयं ''उत्तरगोग्रहणम्'' इति नाम्ना स्मरामः।

अथ धार्मिककार्यक्रमेषु अन्नदानादिसन्दर्भेषु अपि सर्वप्रथमं गवे भोजनं दत्वा -

**गावो मे मातरः सन्तु पितरः सन्तु गोवृषाः।**
**ग्रासमुष्टिं मया दत्तं प्रतिगृह्णन्तु मातरः॥**

इति कथनसम्प्रदायः लोके बहुत्र देवालयादिस्थानेषु सप्रकाशं दृश्यत एव। तथैव - ''धेनुर्माता परमशिवा'', ''गावो विश्वस्य मातरः'', ''गोब्राह्मणेभ्यः शुभमस्तु नित्यं'', ''लोकाः समस्ताः सुखिनो भवन्तु'' इति च प्रवदन्तः भारतीयाः गवां शुभं कामयन्ते। गवां गव्यानां च दिव्या गुणा एव एतादृशश्रद्धायाः कारणं स्यात्।

किञ्च श्रीमन्महाभारते भीष्मयुधिष्ठिरसंवादे गोसावित्रीस्तोत्रे -

**यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते।**
**गवां निःश्वसितं वेदाः सषडङ्गपदक्रमाः।।**
**शिक्षाव्याकरणं छन्दो निरुक्तं ज्योतिषं तथा।**
**एतासामाग्रशृङ्गेषु इन्द्रविष्णू स्वयं स्थितौ।।**

श्रीमन्महाभारते उपर्युक्तप्रकारेण गौः माहात्म्यं उपलभ्यते। तथा च नरः यस्य श्रवणेन = गोशब्दश्रवणेन सर्वपापैः प्रमुच्यते विमुक्तः भवति। धार्मिकप्रपञ्चस्याधारभूताः शिक्षा, व्याकरणं, छन्दः, निरुक्तं, ज्योतिषं, कल्पेति षडङ्गसहिताः चत्वारः वेदाः गवा निश्वसिताः। इन्द्रः विष्णुश्च वसतः गोः श्रृङ्गाग्रेषु।

तस्याः शिरोभागे चतुर्मुखः प्रजापतिः, स्कन्धे देवगुरुः बृहस्पतिः, ललाटे परमशिवः, अश्विनौ देवौ कर्णयोः, चक्षुषोः चन्द्रार्कौ अधिवसतः। एतदुक्तम्-

**शिरो ब्रह्मा गुरुः स्कन्धे ललाटे वृषभध्वजः।**
**कर्णयोरश्विनौ देवौ चक्षुषोः शशिभास्करौ।।** इति।

**दंष्ट्रेषु मरुतो देवा जिह्वायां च सरस्वती।**
**कण्ठे च वरुणो देवो हृदये हव्यवाहनः।।**
**उदरे पृथिवी देवी सशैलवनकानना।**
**ककुदि द्यौः सनक्षत्रा पृष्ठे वैवस्वतो यमः।।**
**उर्वोस्तु वसवो देवाः वायुर्जङ्घे समाश्रिताः।**
**आदित्यस्त्वाश्रितो बाले साध्याः सर्वाङ्गसन्धिषु।।**

गोः दन्तेषु वायुः, जिह्वायां सरस्वती, कण्टे वरुणः, हृदये देवः हव्यवाहनः अग्निः, पर्वत-वनकाननादिभिः समन्विता पृथ्वीदेवी उदरभागे, श्रृङ्गे सनक्षत्रं व्योम, पृष्ठे वैवस्वतः यमः, उर्व्यां अष्टवसवः, जङ्घे वायुदेवः, पुच्छे आदित्यः इत्येवं तत्र तत्र अधिष्ठिताः समुल्लसन्ति।।

**अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम्।**
**धृतिः पुष्टिर्महालक्ष्मीर्गोमये संस्थिता सदा।।**
**नासिकायां च श्रीदेवी ज्येष्ठा वसति भामिनी।**
**चत्वारः सागराः पूर्णा गवां ह्येव पयोधरे।।**
**खुरमध्येषु गन्धर्वाः खुराग्रे पन्नगाः श्रिताः।**

एवं गोः पृष्ठभागे (अपानस्थाने) सर्वतीर्थानि, गौमूत्रे देवनदी गङ्गा, गोमये धृतिः पुष्टिश्च महालक्ष्मीः सर्वदा संस्थिता भवति। नासिकायां भामिनी ज्येष्ठा श्रीदेवी अधिवसति। पयोधरे चत्वारः सागराः भवन्ति। खुरमध्यभागेषु गन्धर्वाः, अग्रे पन्नगाः, पश्चिमे भागे अप्सराणां गणाः भवन्ति इत्यादिरुपेण धेनोः प्रत्यङ्गे एकैका देवता सन्निहिता इत्युक्तम्। तथैव ''गोमूत्रे जाह्नवी स्वयम्'' इति गोमूत्रमपि पुण्यतममिति श्रूयते।

किञ्च - **''गावो मे ह्यग्रतः सन्तु गावो मे सन्तु पृष्ठतः।**
**गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्।।''**

इति स्वयं श्रीकृष्णः तस्य अत्यन्तप्रीतिपात्रा गौरिति वदति।

शास्त्रकारैस्तु गोहत्या महापातकेष्वन्यतमा इति परिगणिता। दशदानेष्वन्यतमस्य गोदानस्य महत्फलं वर्णितं स्मृतिषु। बहूनां कर्मणां प्रायश्चित्तरूपेण 'गोसेवा' विहिता। भोजनसमये यदि गवाम् आक्रन्दध्वनिः श्रूयते तर्हि भोजनं तत्रैव स्थगयित्वा आदौ गावः विचारणीयाः इति ब्रुवन्ति केचन सम्प्रदायविदः। गोमयस्य उपरि मानवेन मलमूत्रादिकं न विसर्जनीयम् इति मनुना नियमो विहितः। गोमयविषये एव एतादृशी श्रद्धा चेत् गोः विषये कियती श्रद्धा धारणीया! महाराजेन दिलीपेन गोविषयकापराधपरिहाराय गोसेवा कृता, गवां रक्षणाय भगवान् श्रीकृष्णः कालियमर्दनं गोवर्धनोद्धरणञ्च चकारेति प्रथा अस्त्येव।

एतादृशमहामहिमोपेतानां गवां रक्षणं सेवा च देशस्य संवर्धनहेतुः भवतीत्यत्र न हि संशयः। न केवलं पुण्यदृष्ट्या अपि च देशस्य कर्तव्यताबुध्या च ताः संरक्षणीयाः।

**सर्वकामदुघे देवि सर्वतीर्थाभिषेचिनि।**
**पावने सुरभि श्रेष्ठे देवि तुभ्यं नमोऽस्तु ते।।**



# पुराणेषु श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



पूर्वोक्तप्रकारेण ''तीर्थप्रबन्धे'' श्रीमद्वेङ्कटनायकं स्तुतवन्तः श्रीमद्वादिराजतीर्थाः कन्नडभाषायां सरागाः तालबद्धा असंख्याकाः कृतीः अरचयन्। तासु ''नारायणनेनेवे मनवे'', ''ईतने लोकगुरु वेदविख्यात'', ''आञ्जनेयने अमरवन्दित'', ''मुद्दु मुखदातनम्म'', ''ओन्दुबारिस्मरणे सालदे'', ''नेनेवेननुदिन नीलनीरदवर्णन गुणरन्न'', ''ईगलो इन्न्यावागलो'' इत्यादिपदानि (गीतानि) सुप्रसिद्धानि। श्रीमद्वादिराजतीर्थानां ''दशावतारस्तुतिः'' इति ग्रन्थः लयात्मकः अत्यन्तगम्भीरया प्रौढपदावल्या प्रतिनिबद्धोऽस्ति। वादिराजतीर्थैः कन्नडभाषायां अभिगीतायां ''पानवमाडुवेनु ना। मनदणिय नामामृतव'' इत्यस्यां श्रीनिवासस्य नाम मध्वपेक्षया मधुतममिति, शर्करा कदली-खर्जूर-द्राक्षादिभ्यः उत्तमोत्तममाधुर्यवदिति, तस्य नामस्मरणेन सायुज्यमवाप्नुम इति स्तुतवन्तः।

'सारिदेनो निन्न वेङ्कटरन्न' इति गीतान्तरं सुप्रसिद्धमस्ति। अस्मिन् गीते वक्ष्यमाणप्रकारेण तं देवं स्तुतवन्तः। अनाथस्य मम बन्धुः त्वम्। भवदीयः इति परिगणय्य स्वयं दृष्टिं प्रसारय। अपचारान् अगणय्य हे देव देवेश यथा भक्ताननुगृह्णाति तथा माम् अनुगृह्य परिरक्षतु हयवदन! वेङ्कटेश! संरक्षतु इति स्तुतवन्तः।

श्रीवादिराजस्वामिपादाः वेङ्कटेशस्य दशावतारान् संदर्श्य स्तुतवन्तः।

मन्निसो श्रीवेङ्कटेश। मञ्जुगुणि पुरवास।
सन्नुत सद्गुणपूर्ण सुप्रसन्न हयवदन।।
देशदेशदिन्द बन्दजनरिगे मुददिन्द
लेसिनवरवीवेनिरुत कावे।।
भासुर मोहन वेष भानुकोटि सुप्रकाश
श्रीसतियप्राणेश श्रीश्रीनिवास।।

विविधप्रान्तेभ्यः आगन्तॄन् भक्तान् समोदम् उन्नतवरदानपूर्वकं यो रक्षति, सः देवदेवः भवान् प्रकाशमानः सुन्दरः लक्ष्मीपतिः श्रीनिवासः इति उद्गीतवन्तः।

वारिधियोळगाडिदे। गिरिय बेन्नलेत्तिदे।
भारव धरेयतन्दे। दैत्यन कोन्दे।
दुरुळबलियनु मेट्टिदे। दैत्यनृपरनु कुट्टिदे।

**तरुणुगभयनवनिन्ते। तरुवकित्ते।**
**पुरदनारियरनु पन्थदिगेलिदे।**
**वरकल्कियागि तुरगवनेरिदे।**
**वरदप्रसन्न हयवदन वेङ्कटराय**
**पोरेयो एन्देन्दु एन्नवनन्नु।।**

उपर्युक्तचरणे "वारिधियोळगाडिदे" इति मत्स्यरूपिणं, पृष्ठे पर्वतं धृतवानिति कूर्मरूपिणं, भरवतीं भूमिम् आनीतवानिति वराहरूपिणं, दैत्यं हतवानिति नरसिंहरूपिणं, बलिनं पादघातेन प्रहितवानिति वामनं, दुष्टराजानं संहृतवानिति परशुरामं, तरुण्याः अभयप्रदाता इति रामचन्द्रं, वृक्षं विदार्येति यमळार्जुनोद्धारकं श्रीकृष्णं, पुरि स्थितान् नारीन् विजित्य इति बुद्धं, अश्वारोहक इति कल्किनम् इत्येवं दशसु अवतारेषु स्वामिनं श्रीश्रीनिवासं स्तुवन् रक्षणं प्रार्थयन्ति श्रीवादिराजतीर्थाः। अस्य कन्नडकृतिषु तत्त्वम्, सिद्धान्तः निस्सन्देहता, स्पष्टता, निर्णयः इत्यादयः प्रत्येकस्थानमलङ्कुर्वन्ति।

श्रीशनीनहुदो। शेषाचलवासनीनहुदो! इति सुप्रसिद्धकृतौ श्रीनिवासमुद्दिश्य "स्वामिन् भवान् श्रीशः अस्ति" नाम लक्ष्मीदेव्याः ईशः शेषाचलवास इत्यस्तौत्। "वैकुण्ठो वेङ्कटगिरिः। वासुदेवो रमापतिः।
**मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम्।**
**स्वामि पुष्करिणीतीरे रमया सह मोदते।।**
इत्यादिपुराणवाक्याधारेण भूवैकुण्ठः वेङ्कटाचलः। रमानाथः श्रीमहाविष्णुरेव वेङ्कटेश्वरः सन् परमवैकुण्ठं विहाय लक्ष्मीदेव्या साकं भूधरेऽस्मिन् स्थितस्वामिपुष्करिणीतीरे विराजमानः श्रीशः त्वम् इति श्रीनिवासतत्त्वं ज्ञापयितुमेव इदं प्रगीतम्। एवमेव गानचरणेषु श्रीवेङ्कटेश्वरस्य तथा प्राक्तनावताराणां मध्ये भेदो नास्तीति ज्ञापयन्ति।

"शेषशयन सुरेशवन्दित शेषजनरनु पालिसि
बड्डि कासु सेविसि गण्टुकट्टुव क्यासक्कि तिम्मप्प नीने"
हे श्रीनिवास त्वं शेषशयनः। इन्द्रादिदेवताभ्यः वन्द्यः अशेषजनसंरक्षकः। उपहरणग्राही उत्कृष्टान्नादीन् नैवेद्यत्वेन भुञ्जानः इति व्याजनिन्दस्तुतिपरतया श्रीमन्नारायण एवऽसौ इति सूचितवन्तः।

**तन्दे नीनहुदो करुणासिन्धु नीनहुदो।**
**अन्दु द्रुपदन नन्दनेय एळेतन्दु धसियमाडुतिरलु**
**मुन्दे बन्दु अक्षयवेन्दु सलहिद**
**मन्दहास मुकुन्दनु नीने।**

पिता त्वमेव, करुणासिन्धुः त्वमेव। सभायां द्रौपद्याः वस्त्रापहरणसन्दर्भे अक्षयदुकूलप्रसादेन तां परिरक्षितः श्रीकृष्णः त्वमेव इति कीर्तयन्ति।

**एवं श्रीकृष्णरुपेण क्रीडते वेङ्कटाचले**
**धीरनीनहुदो जगदोद्धार नीनहुदो**
**बारिवारिगे निन्नपाद सुवारिजङ्गळ सेरिद भक्तर**
**घोरदुरितव दूरगैसुव मारजनक अपारमहिमने।**

धीरस्य जगदोद्धारस्य च तव पादपद्ममाश्रित्य सदा सेवमानानां भक्तानां घोरम् अघसमूहं नाशयति यः मन्मथजनकः महामहिमः स एव त्वम् इति कीर्तयन्ति।

**धन्यनीनहुदो सुरमुनिमान्यनीनहुदो**
**पन्नगारिवाहन्न धरेयोळु इन्नु निनगेदुरु यारु काणेनो**
**प्रसन्न नागेलो भिन्नह केळु प्रपन्नवत्सल श्रीहयवदन।**

धन्योऽसि त्वं सुरमुनिमान्योऽसि त्वं, खगेशमेव वाहनत्वेन स्वीकृतस्य भवतः समः धीरोऽन्तरः कः? नास्त्येव अस्मिन् जगति। अतः प्रसन्नः सन् मम प्रार्थनामाकर्ण्य मां रक्ष। सर्वानपि रक्ष इति प्रार्थयामहे।।



-शम्-



# वायसी - कृष्णसर्पकथा

- श्रीमती यदुश्री के.पि.

चरवाणी - ९४४६५९३२८३

अस्ति कस्मिंश्चित् प्रदेशे महान् न्यग्रोधपादपः। तत्र वायसदम्पती प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्षविवरान्निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततः तौ निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं श्रृगालं गत्वा ऊचतुः - भद्र! किमेवंविधे सञ्जाते आवयोः कर्तव्यं भवति। एष तावद् दुष्टात्मा कृष्णसर्पो वृक्षविवरान्निर्गत्य आवयोः बालकान् भक्षयति।

तत्कथ्यता तद्राक्षार्थं कश्चिदुपायः।

उक्तञ्च -

यस्य क्षेत्रं नदीतीरे भार्या च परसङ्गता।
ससर्पे चगृह वासः कथं स्यात्तस्य निर्वृतिः।।

अस्माकमपि तत्रस्थितानां प्रतिदिनं प्राणसंशयः।

स आह - नात्र विषये स्वल्पः अपि विषादः कार्यः। नूनं स लुब्धो नोपायमन्तरेण वध्यः स्यात्।

यतः -

उपायेन जयो यादृग्रिपोस्तादृङ् न हेतिभिः।
उपायज्ञः अल्पकायः अपि न शूरैः परिभूयते।।

वायस आह - भद्र! तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति?''

श्रृगाल आह - गच्छतु भवान् कञ्चिन्नगरं राजाधिष्ठानम्। तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कमकसूत्रं हारं वा गृहीत्वा तत्कोटेरे प्रक्षिप, येन सर्पस्तद् ग्रहणेन वध्यते। अथ तत्क्षणात् काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ। ततश्च काकी किञ्चिस्तरः प्राप्य यावत्पश्यति, तावन्मध्ये एकस्य राज्ञः अन्तःपुरं जलासन्नं न्यस्तकनकसूत्रं मुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते। अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे। कञ्चुकिनः भृत्याश्च तन्नीयमानमुपलक्ष्य, गृहीतलगुडाः सत्वरम् अनुसृताः। वायसी अपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता।

अथ यावद्राजपुरुषाः तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति, तावत्कृष्णसर्पः प्रसारितभोगः तिष्ठति। ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः।

नीति : - ''उपायेन हि यत्कुर्यात् तत् न शक्यं पराक्रमैः'' इति।





चित्रकथा

# गोदाकल्याणम्

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
संस्कृतानुवादः - श्री.चि.गिरिश कुमारः
चित्राणि - श्री के.तुलसीप्रसादः

1 तमिळनाडुदेशे ''श्रीविल्लिपुत्तूरु'' नामके ग्रामे वटपत्रशायिनः मन्दिरं समुल्लसति। तत्र विष्णुचित्तः तुलसीवनं संवर्ध्य स्वामिनः मालाकैङ्कर्यसेवां कुर्वन्नासीत्। एकदा विष्णुचित्तस्य तुलसीवने शिशुः लभ्यते। तदा विष्णुचित्तः (पेरियाळ्वार्)....

2 भगवान् मम सेवया परिसन्तुष्टः मह्यं एकाकिने इमां बालिकां दत्तवान्। अस्यै 'कोदै'' (पुष्पमाला) इति नामकरणं करोमि।



एकमात्रनाम्ना सन्तोषमलभमानः सः पिता तां ''गोदादेवी'' , ''आण्डाळ्'' इत्यपि आहूयति स्म। पितुः अत्यन्तप्रेम्णा गोदादेवी अवर्धत। असदृशसौन्दर्येण उल्लसतीं तां दृष्ट्वा विष्णुचित्तः....

4 हे वत्से!
अतीवसुन्दरी सुवर्णबिम्बसदृशी सर्वाकर्षकवपुष्मती त्वं स्वामिसंबद्धा असि।




6 भगवते नित्यं मालानां निर्माणं दृश्यमाणा सा गोदा, मालां धर्तुमिष्टा। सपदि मालां धृत्वा कूपे प्रतिबिम्बदर्शनेन महदानन्दं प्राप्ता। तद् दृष्ट्वा पिता...




7 स्वामिनः अलङ्कारणार्थं निर्मितां मालां भवती धृतवती। महान् अपराधः सञ्जातः वत्से!।




11 आदिनं विष्णुचित्तस्य चिन्ता न शान्ता। रात्रौ विष्णुचित्तस्य स्वप्ने स्वामी...




14 निद्रातः उत्थाय विष्णुचित्तः वत्सायै वृत्तान्तं जगाद। कदापि दोषः न आचर्यते इति गोदा उक्तवती। दोषाकरणं न ममौन्नत्यं, अपि तु पितुः परिपालनफलमिति उक्तवती। तदा पिता पुत्रीं प्रति ...

15 अम्बे! भवती स्वामिनः प्रीतिपात्रा अस्ति, कारणजन्मवती अस्ति।


















अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम... स्वस्ति

# रसप्रश्नाः

- श्री यल्.अक्षयाचार्यः
चरवाणी - ७०१३२९७२८०

१. वेदस्य अपरं नाम किम् ?

अ. सिद्धविद्या आ. अपरा विद्या
इ. त्रयी ई. ज्ञानगङ्गा

२. ऋग्वेदस्य विषयः कः?

अ. यज्ञक्रिया आ.भगवत्स्तुतिः
इ. शस्त्रम् ई. वनस्पतिविज्ञानम्

३. स्तुतिरिति कस्य वेदस्य विषयः?

अ. ऋग्वेदस्य आ. यजुर्वेदस्य
इ. सामवेदस्य ई. अथर्ववेदस्य

४. यजुर्वेदस्य विषयः कः?

अ. यज्ञक्रिया आ. भगवत्स्तुतिः
इ. शस्त्रम् ई. वनस्पतिविज्ञानम्

५. प्रायश्चितम् कस्य विषयः?

अ. ऋग् आ. यजु
इ. साम ई. अथर्व

६. ऋग्वेदस्य कति शाखाः सन्ति?

अ. २२ (द्वाविंशतिः) आ. २१ (एकविंशतिः)
इ. १० (दश) ई. १२ (द्वादश)

७. ब्रह्म-आदित्यसम्प्रदायौ केन वेदेन सम्बद्धौ?

अ.ऋग्वेदेन आ.यजुर्वेदेन
इ. सामवेदेन ई. अथर्ववेदेन

८. कृष्णयजुर्वेदस्य कति शाखाः सन्ति?

अ. द्वे आ.त्रीणि
इ. चत्वारि ई. पञ्च

९.कौथुम-जैमिनीय-राणायनीयशाखाः केन वेदेन सम्बद्धाः?

अ.ऋग्वेदेन आ.यजुर्वेदेन
इ. सामवेदेन ई. अथर्ववेदेन

१०. पिप्पलादशाखा केन वेदेन सम्बद्धा?

अ.ऋग्वेदेन आ.यजुर्वेदेन
इ. सामवेदेन ई. अथर्ववेदेन

समाधानानि - १.इ २. इ ३. इ ४. अ ५.ई ६. आ ७. आ ८. अ ९. इ १०. ई

# चित्रलेखनम्

अस्य चित्रपटस्य रञ्जितं कुर्मः वा?

उपरि चित्रपटस्य अधो निर्दिष्ट प्रदेशे स्थापयामेव।







अर्थोऽनर्थो महाकोशो महाभोगो महाधनः।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.



धनुर्माससन्दर्भे श्री श्री श्री पेद्दजीयर् स्वामिनः सन्निधौ
श्री गोदादेव्या रचित 'तिरुप्पावै' प्रवचनकार्यक्रमे भागग्राहिणः
श्री श्री श्री चिन्नजीयर् स्वामिपादाः तथा ति.ति.दे तिरुमल अधिकार्यनिर्वहणाधिकारिणः
श्री ए.वि.धर्मारेड्डि महोदयाः। 'तिरुप्पावै' प्रवाचकः आल्वार्दिव्यप्रबन्धप्रोद्यमस्य
प्रत्येकाधिकारिणः आचार्य के. राजगोपालन् महाभागाः।





तिरुपति अन्नमाचार्यकलामन्दिरे 'तिरुप्पावै'
प्रवचनकार्यक्रमं १५-१२-२०२० तमे दिने
ति.ति.दे तिरुपति संयुक्तकार्यनिर्वहणाधिकारिणी
श्रीमती सदा भार्गवी ऐ.ए.एस् महाभागा,
ति.ति.दे इतराधिकारिणश्च प्रारभन्त।



२७-१२-२०२० दिनाङ्के तिरुमलं प्रति आगतवतीभ्यः आन्ध्रप्रदेशीयोन्नत
न्यायलयस्य प्रधानन्यायाधीशाभ्यः जस्टिस् श्री जे.के.महेश्वरी महाभागाभ्यः
ति.ति.दे अधिकार्यनिर्वहणाधिकारिभिः श्री ए.वि.धर्मारेड्डि महोदयैः
दिनसूचिकायाः दैनन्दिन्याश्च प्रदानचित्रम्।



२४-१२-२०२० दिनाङ्के तिरुमलं प्रति आगतवद्भ्यः भारतप्रधानन्यायमूर्तिभ्यः
जस्टिस् श्री अर्विन्द् बाब्डे महोदयेभ्यः ति.ति.दे. पालकमण्डल्यध्यक्षैः
श्री वै.वि.सुब्बारेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारिभिः
डा.के.एस्.जवहर् रेड्डि ऐ.ए.एस् महाभागैः श्रीनिवासस्य चित्रपटप्रदानदृश्यम्।





देहली श्रीवेङ्कटेश्वरकलाशालायां नूतनभवननिर्माणस्य प्रारम्भं २१-१२-२०२० दिनाङ्के
ति.ति.दे पालकमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि, ति.ति.दे कार्यनिर्वहणाधिकारिणः डा.के.एस्. जवहर् रेड्डि ऐ.ए.एस् महाभागाः कृतवन्तः।
अस्मिन् कार्यक्रमे ति.ति.दे आर्थिकविभागनिर्देशकाः एवं मुख्यगणाङ्काधिकारिणः श्री ओ.बालाजी महाभागाः,
पालकमण्डलिसभ्याः श्रीमती वेमिरेड्डि प्रशान्ति, डा.मुन्नवरपु निश्चिता, श्री डि.पि. अनन्तः तथा श्री राकेष् सिन्हा
महाभागाश्च भागं गृहीतवन्तः।

